इति संकल्प्य पितरं सैवं कृतमृषाब्रवीत्। गतस्तात परित्यज्य भर्ता मां सहसैव सः॥
तद्वियुक्ता कथं चाहं तिष्ठामीह यथासुखम्। तद्यामि तीर्थयात्रायै क्लिश्नाम्येतां हतां तनुम्॥
इत्युक्त्वा तमनिच्छन्तमप्यनुज्ञाप्य यत्नतः। पितरं सा ततः प्रायात्सधना सपरिच्छदा॥
क्रमेण गत्वा कृत्वा सा महार्घं गणिकोचितम्। वेषं विवेशोज्जयिनीं पुरीं लोकैकसुन्दरी॥
कृत्वा च परिवारेण सह कर्तव्यसंविदम्। सुमङ्गलेति साकार्षीन्नाम विप्रसुतात्मनः॥
कामरूपान्महात्यागभोग्या नाम्ना सुमङ्गला। आगता गणिकैषेति भृत्यैराख्याप्यतात्र सा॥
देवदत्ताभिधानाथ तत्रत्या गणिकोत्तमा। ददावभ्येत्य तस्यै स्वं राजार्हं मन्दिरं पृथक्॥
तत्र स्थितां भृत्यमुखेनादौ मित्रं स मे शशी। तामब्रवीत्ख्यातिहृतो भाटिर्मे गृह्यतामिति॥
अस्मद्वचोऽनुतिष्ठेद्यः प्रविशेत्सोऽत्र कामुकः। न भाट्या कार्यमस्माकं नान्यैः पशुनिभैर्नृभिः।
इत्युक्तस्तन्मुखेनैव स सुमङ्गलया तया। तथेत्युक्त्वा शशी रात्रिमुखे तन्मन्दिरं ययौ॥
तत्र स प्रथमं द्वारं संप्राप्यावेदितात्मकः। द्वारपालेन जगदे कुर्वस्तत्स्वामिनीवचः॥
स्नातोऽपीह पुनः स्नाहि प्रवेशो नास्ति तेऽन्यथा। तच्छ्रुत्वा स शशी स्नानं तथेत्यङ्गीचकार त
ततः स यावद्दासीभिरभ्यङ्गोद्वर्तनोत्तरम्। विस्रब्धं स्नपितस्तावत्प्रथमः प्रहरो गतः॥
स्नात्वा प्राप्तोऽथ स द्वारं द्वितीयं द्वाररक्षिणा। ऊचे स्नातोऽसि तत्तावत्प्रसाधनविधिं कुरु॥
तथेत्युक्तवतस्तस्य दास्यस्तावत्प्रसाधनम्। चक्रुर्यावद्द्वितीयोऽपि प्रहरः पर्यहीयत॥
तृतीयमथ संप्राप्तः कक्ष्याद्वारं स रक्षिभिः। जगदे भुङ्क्ष्व तावत्त्वं प्रविशाभ्यन्तरं ततः॥
बाढमित्युक्तवन्तं तं दास्यस्तावद्व्यलम्बयन्। आहारैर्विविधैर्यावत्तृतीयः प्रहरो गतः॥
अथ वासगृहद्वारं चतुर्थं स कथंचन। संप्राप्तो द्वारपालेन तत्रैवं निरभर्त्स्यत॥
ग्राम्यकामुक निर्याहि मा खलीकारमाप्स्यसि। कालः किं पश्चिमे यामे गणिकानवसंगमे॥
एवं तिरस्कृतस्तेन स कालेनेव रूपिणा। शशी विगलितच्छायो यथागतमगात्ततः॥
इत्थं सुमङ्गलेत्याख्यां दधत्या वञ्चितास्तया। गणिकारूपया विप्रसुतयान्येऽपि कामुकाः॥
तच्छ्रुत्वा कौतुकादेव कृत्वा द्यूतगतागतम्। अहं नक्तं गृहं तस्या अगच्छं सुप्रसाधितः॥
तत्र द्वाःस्थान्प्रतिद्वारमनुरञ्जयार्थदानतः। तस्या वासगृहद्वारं प्राप्तोऽहमविलम्बितः॥
कालप्राप्तो विमुक्तश्च द्वाराद्द्वाःस्थैः प्रविश्य ताम्। वेश्यावेशापरिज्ञातामपश्यं स्वप्रियामहम्॥
सा पुनः प्रत्यभिज्ञाय कृतप्रत्युद्गमादिका। वेश्येव धूर्ता पर्यङ्कनिषण्णं मामुपाचरत्॥
ततो लोकैकसुन्दर्या साकं नीतनिशस्तया। बद्धानुरागो निर्गन्तुं नाशकं तद्गृहादहम्॥
सापि बद्धरतिः पार्श्वान्नापयाति स्म मे तदा। यावद्दिनैः सगर्भाभून्मेचकाग्रपयोधरा॥
कृत्वाथ कूटलेखं सा विदग्धा मह्यमर्पयत्। राज्ञा मे प्रभुणा लेखः प्रहितो वाच्यतामिति॥
ततश्चाहं तमुन्मुच्य लेखमेवमवाचयम्। श्रीकामरूपतः श्रीमान्मानसिंहो महीपतिः॥
सुमङ्गलामादिशति स्थितास्यत्र चिरं कथम्। शीघ्रमागम्यतां हित्वा देशान्तरकुतूहलम्॥
मयैवं वाचिते लेखे साब्रवीद्दुःखितेव माम्। याम्यहं मयि मा मन्युं कृथाः परवती ह्यहम्॥
एवं कृत्वा मिषं प्रायात्स्वं सा पाटलिपुत्रकम्। अहं तु तां परायत्तेत्यनुरक्तोऽपि नान्वगाम्॥
सा च पाटलिपुत्रस्था कालेन सुषुवे सुतम्। स वर्धमानश्च कलाः सर्वाः शिशुरशिक्षत॥
द्वादशाब्दश्च वयसा स बालो बालचापलात्। दासेरकं सवयसं लत्तया जात्वताडयत्॥
ताडितस्तं च सोऽवादीद्रुदन्दासेरको रुषा। त्वं ताडयसि मां यस्य तव न ज्ञायते पिता॥
मातुर्विदेशभ्रान्ताया जातस्त्वं हि यतस्ततः। इत्युक्तस्तेन वैलक्ष्याद्गत्वाप्राक्षीत्स मातरम्॥
अम्ब को मे पिता कुत्र स चास्ते कथ्यतामिति। साथ माता द्विजसुता वीक्ष्य क्षणमुवाच तम्
पिता ते मूलदेवाख्यो मां त्यक्त्वोज्जयिनीं गतः। इत्युक्त्वा मूलतस्तस्मै स्ववृत्तान्तं शशंस सा
ततः स बालोऽवादीत्तामम्ब तत्रानयाम्यहम्। गत्वा तं पितरं बद्ध्वा प्रतिज्ञां पूरयामि ते॥

इत्युक्त्वा जननीमेव स बालो प्रस्थितस्ततः । तयोक्तमदभिज्ञानः प्रापदुज्जयिनीमिमाम् ॥ २०९
दीव्यन्तमक्षैर्मां तत्र दृष्ट्वाभिज्ञाननिश्चितम् । ठिण्ठास्थानेत्य सर्वांश्च द्यूतेन जयति स्म सः ॥ २१०
बालत्वेऽपि महाधूर्तः सर्वस्य कृतविस्मयः । अर्थिभ्यः स ददाति स्म तद्द्यूतावर्जितं धनम् ॥ २११
रात्रौ स्वयुक्त्या चागत्य कार्पाससन्निचयोपरि । लघु विन्यस्य सुप्तं मां शय्याखट्वामपाहरत् ॥ २१२
ततः प्रबुद्धो दृष्ट्वाहमात्मानं तूलपृष्ठगम् । अखट्वं सहसाभूवं सलज्जाहासविस्मयः ॥ २१३
अथाहमापणं देव शनैर्गत्वा परिभ्रमन् । तमेव बालं तां खट्वां विक्रीणानं व्यलोकयम् ॥ २१४
उपगम्याब्रवं तं च कियता दीयते त्वया । एषा मूल्येन खट्वेति ततो बालोऽब्रवीत्स माम् ॥ २१५
न लभ्यतेऽसौ मूल्येन खट्वा धूर्तशिरोमणे । अपूर्वाद्भुतवृत्तान्तवर्णनेन तु लभ्यते ॥ २१६
तच्छ्रुत्वाहमवोचं तं तर्हि वच्म्यद्भुतं तव । तत्त्वतः सत्यमिति तद्बुद्ध्वा चेदनुमन्यसे ॥ २१७
यदि त्वसत्यमिति तद्वक्ष्यस्यप्रत्ययेन मे । ततस्त्वं जारजातः स्याः खट्वां च प्राप्नुयामहम् ॥ २१८
अनेन समयेनाङ्ग विचित्रं शृणु वच्मि ते । पूर्वं दुर्भिक्षदोषोऽभूद्राष्ट्रे कस्यापि भूपतेः ॥ २१९
स वाहनानां नागानां शीकराम्बुमहाभरैः । सूकरप्रेयसीपृष्ठे स्वयं चक्रे कृषिं नृपः ॥ २२०
ततो धान्यैः समुत्पन्नैः समृद्धः स महीपतिः । दुर्भिक्षं शमयामास प्रजानां जनपूजितः ॥ २२१
एवं मयोक्ते विहसन्सोऽवादीद्बालकस्तदा । नागानां वाहना मेघाः सूकरप्रेयसी क्षितिः ॥ २२२
विष्णोः सूकररूपस्य सा हि प्रियतमोच्यते । तस्यां मेघाम्बुभिर्धान्यमुत्पन्नं चेत्किमद्भुतम् ॥ २२३
इत्युक्त्वा बालधूर्तो मां विस्मितं सोऽब्रवीत्पुनः । इदानीमहमाख्यामि तवापूर्वं किमप्यदः ॥ २२४
प्रत्येषि यदि विज्ञाय तत्सत्यमिति तत्त्वतः । तत्ते खट्वां ददाम्येतां स्यास्त्वं दासो ममान्यथा ॥ २२५
तथेत्युक्ते मया सोऽथ बालधूर्तोऽब्रवीदिदम् । उदपादि पुरा धूर्तपते कोऽपीह बालकः ॥ २२६
अकम्पयत्पदभरेणोर्वीमुत्पन्न एव यः । तदैव वृद्धो भूत्वा च चक्रे लोकान्तरे पदम् ॥ २२७
इत्युक्तवन्तं बालं तं तदबुद्ध्वाहमब्रवम् । अलीकमेतन्नास्त्यत्र सत्यता काप्यहो इति ॥ २२८
ततः स बालोऽवादीन्मां जातस्यैव न किं हरेः । चकम्पे चरणाक्रान्ता वसुधा वामनाकृतेः ॥ २२९
तदैव वृद्धिं गत्वा च चक्रे तेन न किं पदम् । द्युलोके तज्जितोऽस्येव मया दासीकृतोऽसि च ॥ २३०
अत्रापणगताश्चैते सर्वे नौ साक्षिणः पणे । तदहं यत्र गच्छामि तत्रागच्छ समं मया ॥ २३१
इत्युक्त्वा सोऽग्रहीद्बालो धीरो मां पाणिना भुजे । तत्रस्थाश्च तथैवास्य साक्ष्यं सर्वे व्यधुर्जनाः ॥ २३२
ततश्च मामवष्टभ्य पणबद्धं स सानुगः । नयति स्मान्तिकं मातुः पुरं पाटलिपुत्रकम् ॥ २३३
तन्माता च तदानीं तं दृष्ट्वा सा मामभाषत । आर्यपुत्र मयाप्येषा स्वप्रतिज्ञाद्य पूरिता ॥ २३४
आनायितोऽस्यवष्टभ्य त्वज्जातेनैव सूनुना । इत्युक्त्वावर्णयत्साध्वी वृत्तान्तं सर्वसंनिधौ ॥ २३५
ततस्तां बान्धवाः सर्वे स्वप्रज्ञासाधितेप्सिताम् । पुत्रापमृष्टकौलीनामभ्यनन्दन्कृतोत्सवाः ॥ २३६
कृतार्थश्च तया पत्न्या साकं तेन सुतेन च । उषित्वा चिरमत्राहमागामुज्जयिनीमिमाम् ॥ २३७
एवं सन्त्येव देवेह भर्तृभक्ताः कुलाङ्गनाः । न पुनः सर्वथा सर्वा दुर्वृत्ता एव योषितः ॥ २३८
इत्येतां मूलदेवस्य निशम्य वदनात्कथाम् । विक्रमादित्यनृपतिस्तुतोष सह मन्त्रिभिः ॥ २३९
इत्याश्चर्याणि शृण्वन्स पश्यन्कुर्वंश्च भूपतिः । विजित्य विक्रमादित्यः सद्वीपां बुभुजे महीम् ॥ २४०

इति संयोगवियोगैर्निचितामाख्याय विषमशीलकथाम् ।
कण्वमुनिः पुनरवदत्तस्मिन्मां मदनमञ्चुकाविरहे ॥ २४१
एवं भवन्त्यचिन्त्या विरहाश्च समागमाश्च जन्तूनाम् ।
तस्मात्तवापि न चिरान्नरवाहनदत्त संगमः प्रियया ॥ २४२
अवलम्बस्व धृतिं तत्सुचिरं भोक्तासि वत्सराजसुत ।
भार्यासचिवसमेतो विद्याधरचारुचक्रवर्तिपदम् ॥ २४३